भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ॥ २८१ ॥
उपस्थानं ततः कुर्यात्समासिञ्चत्वनेन तु ।
मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ।
कृच्छ्रत्रयं गुरुः कुर्यान्म्रियेत प्रहितो यदि ॥ २८३ ॥
क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।
विपाके गोवृषाणां च भेषजाग्निक्रियासु च ॥ २८४ ॥
मिथ्याभिशंसिनो दोषो द्विःसमो भूतवादिनः ।
मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥ २८५ ॥
महापापोपपापाभ्यां यो ऽभिशंसेन्मृषा परम् ।
अब्भक्षो मासमासीत स जपी नियतेन्द्रियः ॥ २८६ ॥
अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ।
निर्वपेच्च पुरोडाशं वायव्यं पशुमेव वा ॥ २८७ ॥
अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत् ।
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति ॥ २८८ ॥
त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजको ऽभिचरन्नपि ।
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८९ ॥
गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजप्यनिरतः शुध्यते ऽसत्प्रतिग्रहात् ॥ २९० ॥

॥ अथ प्रकीर्णकप्रायश्चित्तप्रकरणम् ॥

प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥ २९१
गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः ।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ २९२ ॥
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रो ऽसृक्पाते कृच्छ्रो ऽभ्यन्तरशोणिते ॥ २९३ ॥

देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥ २९४ ॥

॥ अथ पतितत्यागविधिः ॥

दासीकुम्भं बहिर्ग्रामान्निनयेरन्स्वबान्धवाः ।
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ २९५ ॥
चरितव्रत आयाते निनयेरन्नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः ॥ २९६ ॥
पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः ।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥ २९७ ॥
नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥ २९८ ॥
शरणागतबालस्त्रीहिंसकान्संवसेन्न तु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥ २९९ ॥
घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।
प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥ ३०० ॥
विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।

॥ अथ रहस्यप्रायश्चित्तप्रकरणम् ॥

अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०१ ॥
त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्जले विशुध्येत गां दत्त्वा च पयस्विनीम् ॥ ३०२ ॥
लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०३ ॥
त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ।
ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०४ ॥
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।
गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ ३०५ ॥

प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०६ ॥
ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।
कृत्वा तु रेतोविण्मूत्रप्राशनं च द्विजोत्तमः ॥ ३०७ ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणात्तत्सर्वं विप्रणश्यति ॥ ३०८ ॥
शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०९ ॥
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥ ३१० ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३११ ॥
वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्यदृक् ।
जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ॥ ३१२ ॥

## ॥ अथ कृच्छ्रादिलक्षणप्रकरणम् ॥

ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्यदमाश्चेति यमाः स्मृताः ॥ ३१३ ॥
स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः ॥ ३१४ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
जग्ध्वा परे ऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ॥ ३१५ ॥
पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रो ऽयं महासान्तपनः स्मृतः ॥ ३१६ ॥
पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ ३१७ ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१८ ॥

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ॥ ३१९ ॥
यथा कथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते ।
अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ॥ ३२० ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ३२१ ॥
पिण्याकचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२२ ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३२३ ॥
तिथिवृद्ध्याचरेत्पिण्डाञ्छुक्ले शिख्यण्डसम्मितान् ।
एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥ ३२४ ॥
यथाकथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२५ ॥
कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।
पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत् ॥ ३२६ ॥
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च ।
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ३२७ ॥
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात् ।
यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ॥ ३२८ ॥
श्रुत्वैतानृषयो धर्मान्याज्ञवल्क्येन भाषितान् ।
इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२९ ॥
य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३३० ॥
विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा ।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३३१ ॥
श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति ।
पितॄणां तस्य तृप्तिः स्यादक्षया नात्र संशयः ॥ ३३२ ॥

ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।
वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३३ ॥
य इदं श्रावयेद्विद्वान्द्विजान्पर्वसु पर्वसु ।
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३४ ॥
श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥ ३३५ ॥

इति याज्ञवल्कीये धर्मशास्त्रे

प्रायश्चित्ताख्यः

तृतीयोऽध्यायः ॥

समाप्तं चेदं श्रीयाज्ञवल्क्यप्रणीतं

धर्मशास्त्रम् ॥

BOMBAY PRINTED AT THE EDUCATION SOCIETY'S PRESS, BYCULLA.